[ खण्डम् – ४ ]

४४. **आघृणिः*** आघृणिरागतहृणिः। (५.९)

४५. **पृथुज्रयाः*** पृथुज्रयाः पृथुजवः। (५.९)

[ खण्डम् – ५ ]

४६. **दीधितयः*** दीधितयोऽङ्गुलयो भवन्ति[1] – धीयन्ते कर्मसु।(५.१०)

४७. **अरणी** अरणी प्रत्यृत एने अग्निः। समरणाज्जायत इति वा। (५.१०)

४८. **अथर्युम्*** (अथर्युम्) अतनवन्तम्। (५.१०)

[ खण्डम् – ६ ]

४९. **काणुका*** काणुका कान्तकानीति वा, क्रान्तकानीति वा, कृतकानीति वा, इन्द्रः सोमस्य कान्त इति वा, कणेघात इति वा, कणेहतः कान्तिहतः। (५.११)

[ खण्डम् – ७ ]

५०. **अध्रिगुः*** अध्रिगुर्मन्त्रो भवति – गव्यधिकृतत्वाद्, अपि वा प्रशासनमेवाभिप्रेतं स्यात् तच्छब्दवत्त्वाद्। अग्निरप्यध्रिगुरुच्यते – अधृतगमनः। इन्द्रोऽप्यध्रिगुरुच्यते । (५.११)

५१. **आङ्गूषः*** आङ्गूषः स्तोमः, आघोषः। (५.११)

[ खण्डम् – ८ ]

५२. **आपान्तमन्युः*** (आपान्तमन्युः) आपातितमन्युः। (५.१२)

५३. **तृपलप्रभर्मा** (तृपलप्रभर्मा) तृप्रप्रहारी क्षिप्रप्रहारी सृप्रप्रहारी सोमो वेन्द्रो वा। (५.१२)

५४. **धुनिः*** धुनिर्धूनोतेः। (५.१२)

५५. **शिमी** * शिमीति कर्मनाम[2] – शमयतेर्वा, शक्नोतेर्वा।(५.१२)

५६. **ऋजीषी** ऋजीषी सोमः – यत् सोमस्य पूयमानस्यातिरिच्यते तद् ऋजीषम् – अपार्जितं भवति। तेनर्जीषी सोमः। (५.१२)

५७. **धानाः** धाना भ्राष्ट्रे हिता भवन्ति, फले हिता भवन्तीति वा। (५.१२)

५८. **बब्धाम्** आदिनाभ्यासेनोपहितेनोपधामादत्ते,बभस्तिरत्तिकर्मा। (५.१२)

५९. **प्रतिमानानि** प्रतिमानानि यैः प्रतिमिमते। (५.१२)

६०. **श्मशा*** श्मशा शु अश्नुत इति वा, श्माश्नुते इति वा। (५.१२)

१. निघं०२.५.२१। २.निघं०२.१.२४।



## तृतीयः पादः [ खण्डम् – १ ]

६१. **उर्वशी*** उर्वश्यप्सरा – उरु अभ्यश्नुते, उरुभ्यामश्नुते, उरुर्वा वशोऽस्याः। (५.१३)

६२. **अप्सरस्** अप्सरा अप्सारिणी। अपि वा अप्स इति रूपनाम[1] – अप्सातेः, अप्सानीयं भवत्यादर्शनीयम्। व्यापनीयं वा, स्पष्टं दर्शनायेति शाकपूणिः। 'यदप्स' इत्यभक्षस्य, 'अप्सो नाम' इति व्यापिनः, तद्रा भवति रूपवती। तदनयात्तमिति वा। तदस्यै दत्तमिति वा। (५.१३)

६३. **अप्सः*** अप्स इति रूपनाम[1] – अप्सातेः, अप्सानीयम् भवत्यादर्शनीयम्। व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिः। 'यदप्स' इत्यभक्षस्य, 'अप्सो नाम' इति व्यापिनः। (५.१३)

[ खण्डम् – २ ]

६४. **द्रप्सः** द्रप्सः सम्भृतः प्सानीयो भवति। (५.१४)

६५. **पुष्करम्*** पुष्करमन्तरिक्षम्[2] – पोषति भूतानि। उदकं पुष्करं – पूजाकरं, पूजयितव्यम् वा। इदमपीतरत् पुष्करमेतस्मादेव, पुष्करं वपुष्करं वा। (५.१४)

६६. **पुष्पम्** पुष्पं पुष्पतेः। (५.१४)

६७. **वयुनम्*** वयुनं वेतेः, कान्तिर्वा प्रज्ञा वा। (५.१४)

[ खण्डम् – ३ ]

६८. **वाजपस्त्यम्*** वाजपस्त्यं वाजपतनम्। (५.१५)

६९. **वाजगन्ध्यम्*** वाजगन्ध्यं गध्यत्युत्तरपदम्। (५.१५)

७०. **गध्यम्*** गध्यं गृह्णातेः। (५.१५)

७१. **गधिता** (गधिता) गध्यतिर्मिश्रीभावकर्मा। (५.१५)

७२. **कौरयाणः*** कौरयाणः कृतयानः। (५.१५)

७३. **तौरयाणः*** तौरयाणस्तूर्णयानः। (५.१५)

७४. **अह्रयाणः*** अह्रयाणोऽह्रीतयानः। (५.१५)

७५. **हरयाणः*** हरयाणो हरमाणयानः। (५.१५)

७६. **आरितः*** (आरितः) प्रत्यृतः स्तोमान्। (५.१५)

१.निघं०३.७.६। २.निघं०१.३.१३।

७७. **व्रन्दी*** व्रन्दी व्रन्दतेर्मृदूभावकर्मणः। (५.१५)

[ खण्डम् — ४ ]

७८. **वना** (वना) वनानीति वा, वधेनेति वा। (५.१६; ८.३)

७९. **निष्षपी*** निष्षपी स्त्रीकामो भवति — विनिर्गतसपाः। (५.१६)

८०. **सपः** सपः सपतेः स्पृशतिकर्मणः। (५.१६)

८१. **तूर्णाशम्*** तूर्णाशमुदकं भवति — तूर्णमश्नुते। (५.१६)

८२. **क्षुम्पम्*** क्षुम्पम् अहिच्छत्रकं भवति — यत्क्षुभ्यते।(५.१६)

[ खण्डम् — ५ ]

८३. **अङ्ग** अङ्गेति क्षिप्रनाम — अञ्चितमेवाङ्कितं भवति। (५.१७; द्र०४.३)

८४. **निचुम्पुणः*** निचुम्पुणः सोमः — निचान्तपृणः, निचमनेन प्रीणाति (५.१७)। [ खण्डम् — ६ ] समुद्रोऽपि निचुम्पुण उच्यते — निचमनेन पूर्यते। अवभृथोऽपि निचुम्पुण उच्यते— नीचैरस्मिन् क्वणन्ति, नीचैर्दधतीति वा। (५.१८)

८५. **पदिः*** पदिर्गन्तुर्भवति — यत्पद्यते। (५.१८)

[ खण्डम् — ७ ]

८६. **मुक्षीजा** मुक्षीजा मोचनाच्च सयनाच्च ततनाच्च। (५.१९)

८७. **पादुः*** पादुः पद्यतेः। (५.१९)

८८. **बुसम्*** बुसमित्युदकनाम[१]— ब्रवीतेः शब्दकर्मणः; भ्रंशतेर्वा; यद् वर्षन् पातयत्युदकं रश्मिभिस्तत् प्रत्यादत्ते। (५.१९)

## चतुर्थः पादः [ खण्डम् — १ ]

८९,९० **वृकः***, **वृकी** वृकश्चन्द्रमा भवति — विवृतज्योतिष्को वा, विकृतज्योतिष्को वा, विक्रान्तज्योतिष्को वा (५.२०);[खण्डम्— २] आदित्योऽपि वृक उच्यते — यदावृङ्क्ते। [ खण्डम् — ३ ] श्वापि वृक उच्यते — विकर्तनात्। (५.२१)[२] **(वृकी)** — वृद्धवाशिन्यपि वृकी उच्यते।(५.२१)

९१. **उरणः** उरण ऊर्णावान् भवति। (५.२१)

१. निघं०१.१२.२०।  २. द्र० ६.२६



९२. **ऊर्णा** ऊर्णा पुनर्वृणोतेः, ऊर्णोतेर्वा। (५.२१)

९३. **जोषवाकम्*** जोषवाकमित्यविज्ञातनामधेयम् — जोषयितव्यं भवति। (५.२१)

[ खण्डम् — ४ ]

९४. **कृत्तिः*** कृत्तिः कृन्ततेः,यशो वान्नं वा। इयमपीतरा कृत्तिरेतस्मादेव सूत्रमयी, उपमार्थे वा। (५.२२)

९५. **श्वघ्नी*** श्वघ्नी कितवो भवति — स्वं हन्ति। (५.२२)

९६. **स्वम्** स्वं पुनराश्रितं भवति। (५.२२)

९७. **कितवः** कितवः किं तवास्तीति शब्दानुकृतिः, कृतवान् वाशीर्नामकः। (५.२२)

[ खण्डम् — ५ ]

९८. **दूढ्यः** (दूढ्यः) दुर्धियः पापधियः। (५.२३,२)

९९. **ऊर्मिः** ऊर्मिरूर्णोतेः। (५.२३)

१००. **नौः** नौः प्रणोत्तव्या भवति, नमतेर्वा। (५.२३)

[ खण्डम् — ६ ]

१०१,१०२ **पिपर्ति,पपुरिः** पिपर्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा (५.२४)

१०३. **कुटस्य*** (कुटस्य) कृतस्य कर्मणः। (५.२४)

१०४. **चर्षणिः*** (चर्षणिः) चायिताऽऽदित्यः। (५.२४)

१०५. **शम्बः*** शम्ब इति वज्रनाम[१] — शमयतेर्वा, शातयतेर्वा। (५.२४)

१०६,१०७. **केपयः***, **कपूयम्** केपयः कपूया भवन्ति। कपूयमिति पुनाति कर्म कुत्सितम्, दुष्पूयं भवति। (५.२४)

[ खण्डम् — ७ ]

१०८. **पृथक्** पृथक् प्रथतेः। (५.२५)

१०९. **ईर्मः*** ईर्म इति बाहुनाम[२]— समीरिततरो भवति।(५.२५)

११०. **तूतुम् आकृषे*** (तूतुम् आकृषे) तूर्णम् उपाकुरुषे। (५.२५)

१११. **अंसत्रम्*** अंसत्रम् अंहसस्त्राणम्, धनुर्वा कवचं वा। (५.२५)

११२. **कवचम्** कवचं कु अञ्चितं भवति, काञ्चितं भवति, कायेऽञ्चितं

१. वज्रनामसु (निघं०२.२०) शम्बशब्दो न पठितः, पुनरपि प्रसंगतो वज्रवाचको भवति।
२. निघं०४.१.१४।

भवतीति वा। (५.२५)

[ खण्डम् — ८ ]

११३. **द्रोणम्** द्रोणं द्रुममयं भवति। (५.२६)

११४. **आहावः** आहाव आह्वानात्। (५.२६)

११५. **आवहः** आवह आवहनात्। (५.२६)

११६. **अवतः*** अवतोऽवातितो महान् भवति। (५.२६)

११७. **अश्मचक्रम्** अश्मचक्रम् अशनचक्रम्, असनचक्रमिति वा। (५.२६)

११८. **कोशः*** कोशः कुष्णातेः— विकुषितो भवति। अयमपीतरः कोश एतस्मादेव। (५.२६)

११९. **सञ्चयः** सञ्चय आचितमात्रो महान् भवति। (५.२६)

१२०. **काकुदम्*** काकुदं तालु इत्याचक्षते — जिह्वा कोकुवा, सास्मिन् धीयते, जिह्वा कोकुवा कोकूयमाना वर्णान् नुदतीति वा। (५.२६)

१२१. **कोकुवा** कोकुवा कोकूयतेर्वा स्याच्छब्दकर्मणः। (५.२६)

१२२. **जिह्वा*** जिह्वा जोहुवा। (५.२६)

१२३. **तालु** तालु तरतेस्तीर्णतममङ्गम्, लततेर्वा स्याद् लम्बकर्मणो विपरीताद्, यथा तलम्, लतेत्यविपर्ययः। (५.२६)

१२४. **तलम्** लततेर्वा स्याद् लम्बकर्मणो विपरीताद्। (५.२६)

१२५. **लता** लततेर्वा स्याद् लम्बकर्मणः। (५.२६)

[ खण्डम् — ९ ]

१२६. **सिन्धुः*** सिन्धुः स्रवणाद्। (५.२७; ९.२६)

१२७. **सूर्मि** सूर्मि कल्याणोर्मि। (५.२७)

१२८. **वीरिटम्*** वीरिटं तैटीकिरन्तरिक्षमेवमाह, पूर्वं वयतेः उत्तरम् इरतेः। वयांसीरन्त्यस्मिन्, भांसि वा (५.२७)। [ **खण्डम् — १०** ] वीरिटम् अन्तरिक्षं— भियो वा भासो वा ततिः। (५.२८), [वीरीटे= गणे (५.२८)]

१२९. **विश्पतिः** (विश्पती) सर्वस्य [=विश्वस्य] पातारौ पालयितारौ वा। (५.२८; ४.२६; १२.२९)

१३०. **नियुतः*** नियुतो नियमनाद्वा नियोजनाद्वा। (५.२८)

१३१. **अच्छ*** अच्छाभेः, आप्तुमिति शाकपूणिः। (५.२८)



१३२. **सृणिः*** सृणिरङ्कुशो भवति— सरणाद्। (५.२८)

१३३. **अङ्कुशः** अङ्कुशोऽञ्चतेः, आकुचितो भवतीति वा। (५.२८)

## इति पञ्चमोऽध्यायः

# अथ षष्ठोऽध्यायः

## प्रथमः पादः [ खण्डम् — १ ]

१. **आशुशुक्षणिः*** आशुशुक्षणिः आशु इति च, शु इति च क्षिप्रनामनी भवतः, क्षणिरुत्तरः, क्षणोतेः। आशु शुचा क्षणोतीति वा। सनोतीति वा। ...आ इत्याकार उपसर्गः पुरस्तात्, चिकीर्षितज उत्तरः, आ शुशोचयिषुरिति। (६.१)

२. **क्षणिः** क्षणिः....क्षणोतेः। (६.१)

३. **शुक्** शुक् शोचतेः। (६.१)

४. **शुचिः** शुचिः शोचतेर्ज्वलतिकर्मणः, अयमपीतरः शुचिरेतस्मादेव। निष्षिक्तमस्मात् पापकमिति नैरुक्ताः। (६.१)

[ खण्डम् — २ ]

५. **आशाः*** आशा दिशो भवन्ति[१] — आसदनाद्, आशा उपदिशो भवन्ति — अभ्यशनात्। (६.१)

६. **काशिः*** काशिर्मुष्टिः — प्रकाशनात्। (६.१)

७. **मुष्टिः** मुष्टिर्मोचनाद्वा, मोषणाद्वा, मोहनाद्वा। (६.१)

८,९. **रोदसी***, **रोधसी** रोदसी रोधसी, द्यावापृथिव्यौ — विरोधनाद्। (६.१; ११.४९; १२.४६)

१०. **रोधः** रोधः कूलं — निरुणद्धि स्रोतः। (६.१)

११. **कूलम्** कूलं रुजतेर्विपरीतात्। (६.१)

१२. **लोष्टः** लोष्टः (रुजतेः) अविपर्ययेण (६.१)

१. निघं०१.६.२।

१३. **कुणारुम्*** (कुणारुम्) परिक्वणनं मेघम्। (६.१)

[ खण्डम् – ३ ]

१४. **अलातृणः*** अलातृणोऽलमातर्दनः, मेघः। (६.२)
१५. **वलः*** वलो वृणोतेः। (६.२)
१६. **व्रजः*** व्रजो व्रजत्यन्तरिक्षे। (६.२)
१७. [**गौः** गौः एषा माध्यमिका वाक्।] (६.२)
१८. **हन्तोः** (हन्तोः) हननाद्। (६.२)
१९. **वाणी*** (वाणी) आपो वा वहनाद्, वाचो वा वदनाद्। (६.२)
२०. **पुरुहूतम्** (पुरुहूतं) बहुभिराहूतम्, उदकं भवति। (६.२)

[ खण्डम् – ४ ]

२१. **मूलम्** मूलं मोचनाद्वा, मोषणाद्वा, मोहनाद्वा। (६.३)
२२. **अग्रम्** अग्रम् आगतं भवति। (६.३)
२३. **सललूकम्*, सररूकम्*** सललूकं संलुब्धं भवति, पापकमिति नैरुक्ताः। सररूकं वा स्यात्, सर्त्तेरभ्यस्तात्। (६.३)
२४. **तपुषिः*** तपुषिस्तपतेः। (६.३)
२५. **हेतिः*** हेतिर्हन्तेः। (६.३)
२६. **कत्पयम्** (कत्पयं) सुखपयसम्, सुखम् अस्य पयः। (६.३)
२७. **विस्रुहः*** विस्रुह आपो भवन्ति – विस्रवणात्। (६.३)
२८. **वीरुधः*** वीरुध ओषधयो भवन्ति – विरोहणात्। (६.३)
२९. **नक्षद्दाभम्*** नक्षद्दाभमश्नुवानदाभम्, अभ्यशनेन दभ्नोतीति।(६.३)
३०. **दाभम्** दभ्नोतीति (दाभम्)। (६.३)
३१. **अस्कृधोयुः*** अस्कृधोयुः अकृध्वायुः, कृध्विति ह्रस्वनाम।(६.३)
३२. **कृधु*** कृध्वति ह्रस्वनाम[१] – निकृत्तं भवति। (६.३)
३३. **निशृम्भाः*** निशृम्भा निश्रथ्यहारिणः। (६.३,४)

[ खण्डम् – ५ ]

३४. **बृबदुक्थः*** बृबदुक्थो महदुक्थः,वक्तव्यमस्मा उक्थमिति बृबदुक्थो वा। (६.४)

१. निघं०३.२.६। २. निघं०१.१३.८।



३५. **ऋदूदरः*** ऋदूदरः सोमः – मृदूदरः, मृदुरुदरेष्विति वा। (६.४)
३६. **पुलुकामः*** पुलुकामः पुरुकामः। (६.४)
३७. **असिन्वती** असिन्वती असङ्खादन्त्यौ। (६.४)
३८. **कपनाः*** कपनाः कम्पनाः, क्रिमयो भवन्ति। (६.४)
३९. **भाऋजीकः*** भाऋजीकः प्रसिद्धभाः। (६.४)
४०. **रुजानाः*** रुजाना नद्यो भवन्ति[२] – रुजन्ति कूलानि। (६.४)
४१. **जूर्णिः*** जूर्णिर्जवतेर्वा, द्रवतेर्वा, दूनोतेर्वा। (६.४)
४२. **ओमना*** (ओमना) अवनाय। (६.४)

## द्वितीयः पादः [ खण्डम् – १ ]

४३. **उपलप्रक्षिणी*** उपलप्रक्षिणी उपलेषु प्रक्षिणाति, उपलप्रक्षेपिणी वा। (६.५)। [ खण्डम् – २ ] उपलप्रक्षिणी सक्तुकारिका। (६.६)
४४. **कारुः*** कारुः कर्त्ता स्तोमानाम्। (६.६)
४५. **ततः** तत इति सन्ताननाम – पितुर्वा पुत्रस्य वा। (६.६)
४६. **नना*** नना नमतेः – माता वा, दुहिता वा। (६.६)
४७. **उपसि*** उपसि उपस्थे। (६.६)
४८. **प्रकलविद्*** प्रकलविद् वणिग् भवति – कलाश्च वेद प्रकलाश्च। (६.६)
४९. **अभ्यर्धयज्वा*** अभ्यर्धयज्वा अभ्यर्धयन् यजति। (६.६)
५०. **क्षोणस्य*** क्षोणस्य क्षयणस्य। (६.६)

[ खण्डम् – ३ ]

५१. **पाथस्*** पाथोऽन्तरिक्षम्,पथा व्याख्यातम्। उदकमपि पाथ उच्यते, पानात्। अन्नमपि पाथ उच्यते, पानादेव। (६.७)
५२. **सवीमनि*** सवीमनि प्रसवे। (६.७)
५३. **सप्रथाः*** सप्रथाः सर्वतः पृथुः। (६.७; ९.३२)
५४. **विदथानि*** विदथानि वेदनानि। (६.७, द्र०१.७; ३.१२)

[ खण्डम् – ४ ]

५५. **श्रायन्तः*** (श्रायन्तः) समाश्रिताः। (६.८)

५६. **ओजस्*** ओज ओजतेर्वा, उब्जतेर्वा। (६.८)
५७. **आशीः*** आशीराश्रयणाद्वा, आश्रपणाद्वा। अथेयमितराशीराशास्तेः। (६.८)

[ खण्डम् – ५ ]

५८. **अजीगः*** (अजीगः) अगारीः। जिगर्तिर्गिरतिकर्मा वा, गृणातिकर्मा वा, गृह्णातिकर्मा वा। (६.८)
५९. **मूराः** (मूराः) मूढाः। (६.८)
६०. **अमूर*** (अमूर) अमूढ! (६.८)
६१. **शशमानः*** शशमानः शंसमानः। (६.८)
६२. **देवाच्या*** देवाच्या देवान् प्रति अक्तया। (६.८)
६३. **कृप्** (कृपा) कृप् कृपतेर्वा, कल्पतेर्वा। (६.८)

[ खण्डम् – ६ ]

६४. **विजामाता*** विजामातुरसुसमाप्ताज्जामातुः। विजामातेति शश्वद् दाक्षिणाजाः क्रीतापतिमाचक्षते। असुसमाप्त इव वरोऽभिप्रेतः। (६.९)
६५. **जामाता** जामाता जा = अपत्यम्, तन्निर्माता। (६.९)
६६. **स्यालः** स्याल आसन्नः संयोगेनेति नैदानाः। स्यात् लाजान् आवपतीति वा। (६.९)
६७. **लाजाः** लाजा लाजतेः। (६.९)
६८. **स्यम्** स्यं शूर्पम् – स्यतेः। (६.९)
६९. **शूर्पम्** शूर्पम् अशनपवनम्, शृणातेर्वा। (६.९)

## तृतीयः पादः [ खण्डम् – १ ]

७०. **सोमानम्*** सोमानं सोतारम्। (६.१०)
७१. **कक्षीवान्** कक्षीवान् कक्ष्यावान्, अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्। (६.१०)
७२. **औशिजः** औशिजः उशिजः पुत्रः। (६.१०)
७३. **उशिज्*** उशिग् वष्टेः कान्तिकर्मणः। (६.१०)

[ खण्डम् – २ ]

७४. **अघम्** अघं हन्तेर्निर्ह्रसितोपसर्गः, आहन्तीति। (६.११)



७५. **तपुः** तपुस्तपतेः। (६.११)
७६. **चरुः*** चरुर्मृच्चयो भवति, चरतेर्वा – समुच्चरन्त्यस्मादापः। (६.११)
७७. **क्रव्याद्** क्रव्यादे क्रव्यमदते। (६.११)
७८. **क्रव्यम्** क्रव्यं विकृत्ताज्जायत इति नैरुक्ताः। (६.११)
७९. **अनवायम्*** अनवायम् अनवयवम्, यदन्ये न व्यवेयुरद्वेषस इति वा। (६.११)
८०. **किमीदिने*** किमीदिने किमिदानीमिति चरते, किमिदं किमिदमिति वा पिशुनाय चरते। (६.११)
८१. **पिशुनः** पिशुनः पिंशतेः–विपिंशतीति। (६.११)

[ खण्डम् – ३ ]

८२. **पाजः*** पाजः पालनात्। (६.१२)
८३. **प्रसितिः** प्रसितिः प्रसयनात्, तन्तुर्वा जालं वा। (६.१२)
८४. **अमवान्*** (अमवान्) अमात्यवान्, अभ्यमनवान्, स्ववान् वा।(६.१२)
८५. **इभेन** (इभेन) इराभृता गणेन, गतभयेन हस्तिनेति वा। (६.१२)
८६. **तृष्वी** तृष्वीति क्षिप्रनाम[१]– तरतेर्वा, त्वरतेर्वा। (६.१२)
८७. **तपिष्ठैः** तपिष्ठैस्तप्ततमैः, तृप्ततमैः प्रपिष्टतमैरिति वा। (६.१२)
८८. **अमीवा*** अमीवा अभ्यमनेन व्याख्यातः। (६.१२)
८९. **दुर्णामा** दुर्णामा क्रिमिर्भवति पापनामा। (६.१२)
९०. **क्रिमिः** क्रिमिः क्रव्ये मेद्यति, क्रमतेर्वा स्यात् सरणकर्मणः, क्रामतेर्वा। (६.१२)
९१. **दुरितम्** (दुरितानि) दुर्गतिगमनानि। (६.१२)
९२. **अप्वा*** अप्वा यदेनया विद्धोऽपवीयते, व्याधिर्वा, भयं वा। (६.१२)
९३. **अमतिः*** अमतिरमामयी मतिरात्ममयी। (६.१२)
९४. **(श्रुष्टिः) श्रुष्टी** * श्रुष्टीति क्षिप्रनाम, आशु अष्टीति। (६.१२)

[ खण्डम् – ४ ]

९५. **नासत्यौ** नासत्यौ चाश्विनौ। सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य प्रणेतारावित्याग्रायणः। नासिकाप्रभवौ बभूवतुरिति वा।(६.१३)
९६. **पुरन्धिः*** पुरन्धिर्बहुधीः। तत्कः? पुरन्धिर्भगः, पुरस्तात् तस्यान्वादेश

१. निघं०२.१५.१०।

इत्येकम्। इन्द्र इत्यपरम्, स बहुकर्मतमः, पुरां च दारयितृतमः।वरुण इत्यपरम्, तं प्रज्ञया स्तौति। (६.१३, द्र०१२.३०)

९७. **रुशद्*** रुशदिति वर्णनाम, रोचतेर्ज्वलतिकर्मणः। (६.१३; २.२०)

[ खण्डम् — ५ ]

९८. **रिशादसः*** (रिशादसः) रेशयद् आसिनः। (६.१४)[‘रेशयदारिणः’ इति क्वचित्]

९९. **आप्यम्** आप्यमाप्नोतेः। (६.१४)

१००. **सुदत्रः*** सुदत्रः कल्याणदानः। (६.१४)

१०१. **सुविदत्रः** सुविदत्रः कल्याणविद्यः। (६.१४; ७.९)

१०२. **आनुषक्*** आनुषगिति नामानुपूर्व्यस्य— अनुषक्तं भवति। (६.१४)

१०३. **तुर्वणिः*** तुर्वणिस्तूर्णवनिः। (६.१४)

१०४. **गिर्वणस्*** गिर्वणा देवो भवति — गीर्भिरेनं वनयन्ति। (६.१४)

[ खण्डम् — ६ ]

१०५. **असूर्ते*** (असूर्ते) असुसमीरिताः, वातसमीरिताः (माध्यमिका देवगणाः)। (६.१५)

१०६. **सूर्ते*** (सूर्ते) सुसमीरिते। (६.१५)

१०७. **अम्यक्*** (अम्यक्) अमाक्तेति वा, अभ्यक्तेति वा। (६.१५)

१०८. **यादृश्मिन्*** (यादृश्मिन्) यादृशे। (६.१५)

[ खण्डम् — ७ ]

१०९. **अग्रिया*** (अग्रिया) अग्रगमनेनेति वा, अग्रगरणेनेति वा, अग्रसम्पादिन इति वा । अपि वाग्रमित्येतदनर्थकमुपबन्धमाददीत। (६.१६)

११०. **चनः** चन इत्यन्ननाम। (६.१६)

१११. **पचता** (पचता) पचतिर्नामीभूतः[१], अपि वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्यत्। यत्र ह्येकवचनार्थः प्रसिद्धं (तत्र) तद् (एकवचनं) भवति। (६.१६)

११२. **शुरुधः*** शुरुध आपो भवन्ति— शुचं संरुन्धन्ति। (६.१६)

११३. **अमिनः*** अमिनोऽमितमात्रो महान् भवति, अभ्यमितो वा। (६.१६)

१. पचतानि, पक्वानि इत्यर्थः।



११४. **जज्झतीः** जज्झतीरापो भवन्ति, शब्दकारिण्यः। (६.१६)

११५. **अप्रतिष्कुतः*** अप्रतिष्कुतोऽप्रतिष्कृतः, अप्रतिस्खलितो वा। (६.१६)

११६. **शाशदानः*** शाशदानः शाशाद्यमानः। (६.१६)

## चतुर्थः पादः [ खण्डम् — १ ]

११७. **सृप्रः*** सृप्रः सर्पणात्। इदमपीतरत् सृप्रमेतस्मादेव, सर्पिर्वा तैलं वा। (६.१७)

११८. **करस्नौ*** करस्नौ बाहू[१] —कर्मणां प्रस्नातारौ। (६.१७)

११९. **सुशिप्रम्*** सुशिप्रमेतेन व्याख्यातम्। (६.१७)

१२०. **हनुः** हनुर्हन्तेः। (६.१७)

१२१. **नासिका** नासिका नसतेः। (६.१७)

१२२. **धेना*** धेना दधातेः। (६.१७)

१२३. **रंसु*** रंसु रमणीयेषु — रमणात्। (६.१७)

१२४. **द्विबर्हाः*** द्विबर्हा द्वयोः स्थानयोः परिवृढो मध्यमे च स्थाने उत्तमे च। (६.१७)

१२५. **बर्हस्** बर्हाः परिवृढः। (६.१७)

१२६. **अक्रः*** अक्र आक्रमणात्। (६.१७)

१२७. **उराणः*** उराण उरु कुर्वाणः। (६.१७)

[ खण्डम् — २ ]

१२८. **स्तियाः*** स्तिया आपो भवन्ति — स्त्यायनात्। (६.१७)

१२९. **स्तिपाः*** स्तिपा स्तियापालनः, उपस्थितान् पालयतीति वा। (६.१७)

१३०. **जवारु*** जवारु जवमानरोहि, जरमाणरोहि, गरमाणरोहीति वा। (६.१७)

१३१, १३२. **जरूथम्*, गरूथम्** जरूथं गरूथम् — गृणातेः। (६.१७)

१३३. **कुलिशः*** कुलिश इति वज्रनाम[२] — कूलशातनो भवति। (६.१७)

१३४. **स्कन्धः** स्कन्धो वृक्षस्य — समास्कन्नो भवति, अयमपीतरः स्कन्ध एतस्मादेव—आस्कन्नं काये। (६.१७)

१. निघं०२.४.७। २. निघं०२.२०.१२। ३. निघं०१.९.६। ४. निघं० १.७.२०।

१३५. **तुञ्जः*** तुञ्जस्तुञ्जतेर्दानकर्मणः। (६.१७)

[ खण्डम् — ३ ]

१३६. **बर्हणा*** बर्हणा परिबर्हणा। (६.१८)

[ खण्डम् — ४ ]

१३७. **घ्रंसः*** घ्रंस इत्यहर्नाम[३] — ग्रस्यन्तेऽस्मिन् रसाः। (६.१९)

१३८. **ऊधस्*** ऊध उद्धततरं भवति, उपोनद्धमिति वा। स्नेहानुप्रदानसामान्याद् रात्रिरप्यूध उच्यते[४]। (६.१९)

१३९. **ततनुष्टिः*** (ततनुष्टिम्) तितनिषुं धर्मसंतानादपेतम्, अलंकरिष्णुम्, अयज्वानम्। (६.१९)

१४०. **तनूशुभ्रम्** तनूशुभ्रं तनूशोभयितारम्। (६.१९)

१४१. **कवासखः** (कवासखः) यस्य कपूयाः सखायः। (६.१९)

१४२. **इलीबिशः*** (इलीबिशस्य) इलाबिलशयस्य। (६.१९)

[ खण्डम् — ५ ]

१४३. **कियेधाः*** कियेधाः कियद्धा इति वा, क्रममाणधा इति वा। (६.२०)

१४४. **भृमिः*** भृमिर्भ्राम्यतेः। (६.२०)

१४५. **विष्पितः*** विष्पितो विप्राप्तः। (६.२०)

[ खण्डम् — ६ ]

१४६. **तुरीपम्*** (तुरीपम्) तूर्णापि। (६.२१)

१४७. **रास्पिनः*** रास्पिनो रास्पी — रपतेर्वा रसतेर्वा। (६.२१)

१४८. **ऋञ्जतिः** ऋञ्जतिः प्रसाधनकर्मा। (६.२१)

१४९. **ऋजुः** ऋजुरित्यप्यस्य (ऋञ्जतेः एव) भवति। (६.२१)

१५०. **प्रतद्वसू*** प्रतद्वसू प्राप्तवसू। (६.२१)

[ खण्डम् — ७ ]

१५१. **शकटम्** शकटं शकृदितं भवति, शनकैस्तकतीति वा, शब्देन तकतीति वा। (६.२२)

१५२. **चोष्कूयमाणः** (चोष्कूयमाणः) ददद्। चोष्कूयमाण इति चोष्कूयतेश्चर्करीतवृत्तम्। (६.२२)

१५३. **वामम्*** (वामम्) वननीयम्। (६.२२,३१; ४.२६; ११.४६)



१५४. **सुमत्*** सुमत् स्वयम् इत्यर्थः। (६.२२)

१५५. **दिविष्टिषु*** दिविष्टिषु दिव एषणेषु। (६.२२)

[ खण्डम् — ८ ]

१५६. **स्थूरः** स्थूरः समाश्रितमात्रो महान् भवति। (६.२२)

१५७. **अणुः** अणुरनु स्थवीयांसम्, उपसर्गो लुप्तनामकरणः, यथा — सम्प्रति। (६.२२)

१५८. **कुरुङ्गः** कुरुङ्गो राजा बभूव — कुरुगमनाद्वा, कुलगमनाद्वा। (६.२२)

१५९. **कुरुः*** कुरुः कृन्ततेः। (६.२२)

१६०. **क्रूरम्** क्रूरमित्यप्यस्य (=कृन्ततेः) भवति। (६.२२)

१६१. **कुलम्** कुलं कुष्णातेः — विकुषितं भवति। (६.२२)

## पञ्चमः पादः [ खण्डम् — १ ]

१६२. **अमत्रः*** अमत्रोऽमात्रो महान् भवति, अभ्यमितो वा। (६.२३;५.१)

१६३. **ऋचीषमः*** (ऋचीषमः) ऋचा समः। (६.२३)

१६४. **अनर्शरातिम्*** अनर्शरातिम् अनश्लीलदानम्। (६.२३)

१६५. **अश्लीलम्** अश्लीलं पापकम्—अश्रिमद्विषमम्। (६.२३) [क्वचिद्-अश्रीमद्विषमम् इति पाठः ]

१६६. **अनर्वा*** अनर्वाऽप्रत्यृतोऽन्यस्मिन्। (६.२३; ४.२७)

१६७. **मन्द्रजिह्वम्** मन्द्रजिह्वं मन्दनजिह्वम्, मोदनजिह्वमिति वा। (६.२३)

१६८. **असामि*** असामि सामि प्रतिषिद्धम्। (असामि) असुसमाप्तम्। (६.२३)

१६९. **सामि** सामि स्यतेः। (६.२३)

[ खण्डम् — २ ]

१७०. **गल्दया*** गल्दा धमनयो भवन्ति — गलनम् आसु धीयते। (गल्दया) गालनेन। (आगल्दा) आगलना। (६.२४)

[ खण्डम् — ३ ]

१७१. **जल्हवः*** (जल्हवः) ज्वलनेन हीनाः। (६.२५)

[ खण्डम् — ४ ]

१७२. **बकुरः*** बकुरो भास्करः, भयङ्करः, भासमानो द्रवतीति वा। (६.२५); (बकुरेण) ज्योतिषा वोदकेन वा। (६.२६)
१७३. **वृकः*** वृको लाङ्गलं भवति — विकर्तनात्। (६.२६, द्र० ५.२०,२१)
१७४. **लाङ्गलम्** लाङ्गलं लङ्गतेः, लाङ्गूलवद्वा। (६.२६)
१७५. **लाङ्गूलम्** लाङ्गूलं लगतेः, लङ्गतेः, लम्बतेर्वा। (६.२६)
१७६. **बेकनाटाः*** बेकनाटाः खलु कुसीदिनो भवन्ति — द्विगुणकारिणो वा, द्विगुणदायिनो वा, द्विगुणं कामयन्त इति वा। (६.२६)

[ खण्डम् — ५ ]

१७७. **अभिधेतन** (अभिधेतन) अभिधावत। (६.२७)
१७८. **मत्स्याः** मत्स्या मधौ उदके स्यन्दन्ते, माद्यन्तेऽन्योऽन्यं भक्षणायेति वा। (६.२७)
१७९. **जालम्** जालं जलचरं भवति, जले भवं वा, जले शयं वा। (६.२७)
१८०. **अंहुरः*** अंहुरोंऽहस्वान्, अंहूरणम् इत्यप्यस्य भवति। (६.२७)
१८१. **बतः*** बत इति निपातः खेदानुकम्पयोः। (६.२७)[ **खण्डम् — ६** ] बतो बलातीतो भवति, दुर्बलः। (६.२८)
१८२. **लिबुजा** लिबुजा व्रततिर्भवति— लीयते विभजन्तीति। (६.२८)
१८३. **व्रततिः** व्रततिर्वरणाच्च, सयनाच्च, ततनाच्च। (६.२८)
१८४. **वाताप्यम्*** वाताप्यमुदकं भवति — वात एतदाप्याययति। (६.२८)
१८५. **चाकन्** (चाकन्) चायन् इति वा,कामयमान इति वा। (६.२८)
१८६. **वायः** वायो वेः पुत्रः।[1] वेति च य इति च चकार शाकल्यः। उदात्तं त्वेवमाख्यातमभविष्यद्, असुसमाप्तश्चार्थः। (६.२८)
१८७. **रथर्यति*** रथर्यतीति सिद्धस्तत्प्रेप्सू,रथं कामयत इति वा। (६.२८)

## षष्ठः पादः [ खण्डम् — १ ]

१८८. **असक्राम्*** (असक्राम्) असंक्रमणीम्। (६.२९)
१८९. **आधवः*** आधव आधवनात्। (६.२९)
१९०. **अनवब्रवः*** अनवब्रवोऽनवक्षिप्तवचनः। (६.२९)

[ खण्डम् — २ ]

१. वने न वायो न्यधायि चाकन् (ऋ०१०.२९.१)।



१९१. **काणः** काणोऽविक्रान्तदर्शनः [विक्रान्तदर्शनः] इत्यौपमन्यवः। कणतेर्वा स्यादणूभावकर्मणः। कणतिः शब्दाणूभावे भाष्यतेऽनुकणतीति। मात्राणूभावात् कणः, दर्शनाणूभावात् काणः। (६.३०)
१९२. **कणः** कणतिः शब्दाणूभावे भाष्यतेऽनुकणतीति। मात्राणूभावात् कणः। (६.३०)
१९३. **विकटः** विकटो विक्रान्तगतिरित्यौपमन्यवः। कुटतेर्वा स्याद् विपरीतस्य— विकुटितो भवति। (६.३०)
१९४. **सदान्वे*** (सदान्वे) सदानोनुवे शब्दकारिके। (६.३०)
१९५. **शिरिम्बिठः*** शिरिम्बिठो मेघः — शीर्यते बिठे। बिठमन्तरिक्षम्, बीरिटेन व्याख्यातम्।[1] अपि वा शिरिम्बिठो भारद्वाजः। (६.३०)
१९६. **पराशरः*** पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। इन्द्रोऽपि पराशर उच्यते - पराशातयिता यातूनाम्। (६.३०)
१९७. **क्रिविर्दती*** क्रिविर्दती विकर्त्तनदन्ती। (६.३०)
१९८. **करूळती*** करूळती कृत्तदती (६.३०)। [**खण्डम् ३**] तत्कः करूळती? भगः पुरस्तात्तस्यान्वादेश इत्येकम्। पूषेत्यपरं, सोऽदन्तकः- ''अदन्तकः पूषा'' इति च ब्राह्मणम्। (६.३१)
१९९. **वामम्*** वामं वननीयं भवति। (६.३१,२२; ४.२६; ११.४६)
२००. **आदुरिः** आदुरिरादरणात्। (६.३१)
२०१. **दनस्*** (दनः) दानमनसः। (६.३१)
२०२. **शरारुः*** (शरारुः) संशिशरिषुः। (६.३१)
२०३. **इदंयुः** इदंयुरिदं कामयमानः। अथापि तद्वदर्थे(मत्वर्थे) भाष्यते। (६.३१)

[ खण्डम् — ४ ]

२०४. **कीकटाः*** कीकटा नाम देशोऽनार्यनिवासः। कीकटाः किंकृताः, किं क्रियाभिरिति प्रेप्सा वा। (६.३२)
२०५. **प्रमगन्दः,मगन्दः** मगन्दः कुसीदी। माङ्गदः=मामागमिष्यतीति च ददाति। तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः। प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः। पण्डको वा। (६.३२)

१. द्र०निरु०५.२७।

२०६. **माङ्गदः** माङ्गदो मामागमिष्यतीति च ददाति। (६.३२)

२०७. **पण्डकः** पण्डकः पण्डगः, प्रार्दको वा प्रार्दयत्याण्डौ। (६.३२)

२०८. **आण्डौ** आण्डौ आणी इव व्रीडयति तत्स्तम्भे। (६.३२)

२०९. **आणिः*** आणिररणात्। (६.३२)

२१०. **नैचाशाखम्** नैचाशाखं नीचाशाखो नीचैःशाखः। (६.३२)

२११. **शाखाः*** शाखाः शक्नोतेः। (६.३२; १.४)

२१२. **बुन्दः*** बुन्द इषुर्भवति — भिन्दो वा, भयदो वा, भासमानो द्रवतीति वा। (६.३२)

[ खण्डम् — ५ ]

२१३. **तुविक्षम्** तुविक्षं बहुविक्षेपं महाविक्षेपं वा। (६.३३)

२१४. **रण्यौ** (रण्या) रण्यौ रमणीयौ, साङ्ग्राम्यौ वा। (६.३३)

२१५. **ऋदूपे*** ऋदूपे अर्दनपातिनौ गमनपातिनौ वा। (६.३३)

२१६. **ऋदूवृधा** (ऋदूवृधा) मर्माण्यर्दनवेधिनौ, गमनवेधिनौ वा। (६.३३)

[ खण्डम् — ६ ]

२१७,२१८. **वृन्दम्*, वृन्दारकः** वृन्दं बुन्देन व्याख्यातम्[१], वृन्दारकश्च। (६.३४)

[ खण्डम् — ७ ]

२१९. **किः*** (किः) कर्ता। (६.३५)

२२०. **उल्बम्*** उल्बमूर्णोतेः, वृणोतेर्वा। (६.३५)

२२१. **ऋबीसम्*** ऋबीसम् अपगतभासम्, अपहृतभासम्, अन्तर्हितभासम्, गतभासं वा (६.३५)। [ खण्डम् — ८ ] ऋबीसे = पृथिव्याम्। (६.३६)

२२२. **गणः*** गणो गणनाद्। (६.३६)

२२३. **गुणः** गुणश्च [गणनात्]। (६.३६)

## इति षष्ठोऽध्यायः



१. निरु० ६.३२



# अथ सप्तमोऽध्यायः

## प्रथमः पादः [ खण्डम् — १ ]

१. **दैवतम्** तद् यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवतम् इत्याचक्षते। यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति। (७.१)

## तृतीयः पादः [ खण्डम् — २ ]

२. **गोपा** (भुवनस्य) गोपा इत्येष हि (सर्वेषां भूतानां) गोपायितादित्यः। (७.९)

३. **सुविदत्रम्** सुविदत्रं धनं भवति — विन्दतेर्वैकोपसर्गात्, ददातेर्वा स्याद् द्व्युपसर्गात्। (७.९; ६.१४)

[ खण्डम् — ६ ]

४. **मन्त्राः** मन्त्रा मननात्। (७.१२)

५. **छन्दांसि*** छन्दांसि छादनात्। (७.१२)

६. **स्तोमः** स्तोमः स्तवनात्। (७.१२)

७. **यजुः** यजुर्यजतेः। (७.१२)

८. **साम** साम सम्मितमृचा, स्यतेर्वा[१], ऋचा समं मेन इति नैदानाः। (७.१२)

९. **गायत्री** गायत्री गायतेः स्तुतिकर्मणः, त्रिगमना वा विपरीता, ''गायतो मुखादुदपतत्'' इति च ब्राह्मणम्। (७.१२)

[ खण्डम् — ७ ]

१०. **उष्णिह्** उष्णिग् उत्स्नाता भवति, स्निह्यतेर्वा स्यात् कान्तिकर्मणः, उष्णीषिणीवेत्यौपमिकम्। (७.१२)

११. **उष्णीषम्** उष्णीषं स्नायतेः। (७.१२)

१२,१३. **ककुब्*,कुब्जः** ककुप् ककुभिनी भवति, ककुप् च कुब्जश्च कुजतेर्वा, उब्जतेर्वा। (७.१२)

१४. **अनुष्टुब्*** अनुष्टुब् अनुष्टोभनात्। ''गायत्रीमेव त्रिपदां सतीं चतुर्थेन

१. 'अस्यतेर्वा' इत्यपि छेदः।

पादेन अनुष्टोभति'' इति च ब्राह्मणम्। (७.१२)

[ खण्डम् — ८ ]

१५. **बृहती** बृहती परिबर्हणात्। (७.१२)
१६. **पंक्तिः** पंक्तिः पञ्चपदा। (७.१२)
१७. **त्रिष्टुब्** त्रिष्टुप् स्तोभत्युत्तरपदा। का तु त्रिता स्यात्? तीर्णतमं छन्दः। त्रिवृद् वज्रस्तस्य स्तोभतीति वा। ''यत् त्रिरस्तोभत् तत् त्रिष्टुभस्त्रिष्टुप्त्वम्'' इति विज्ञायते। (७.१२)
१८. **त्रिता** का तु त्रिता स्यात्? तीर्णतमम् (छन्दः)। (७.१२; ४.६; ९.२५)

[ खण्डम् — ९ ]

१९. **जगती*** जगती गततमं छन्दः, जलचरगतिर्वा, जल्गल्यमानोऽसृजत् इति च ब्राह्मणम् । (७.१३)
२०. **विराट्** विराड् विराजनाद्वा, विराधनाद्वा, विप्रापणाद्वा। विराजनात् सम्पूर्णाक्षरा, विराधनाद् ऊनाक्षरा, विप्रापणाद् अधिकाक्षरा वा। (७.१३)
२१. **पिपीलिका** पिपीलिका पेलतेर्गतिकर्मणः। (७.१३)

## चतुर्थः पादः [ खण्डम् — १ ]

२२. **अग्निः*** अग्निः कस्मात्? अग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयते, अङ्गं नयति सन्नममानः। अक्नोपनो भवतीति स्थौलाष्ठीविः, न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः— इताद् अक्ताद् दग्धाद्वा नीतात्। स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः। (७.१४)
२३. **अक्नोपनः** अक्नोपनो न क्नोपयति न स्नेहयति। (७.१४)

[ खण्डम् — २ ]

२४. **देवः*** देवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा, द्युस्थानो भवतीति वा। (७.१५)
२५. **देवता** यो देवः सा देवता। (७.१५)
२६. **होता** होतारं ह्वातारम्, जुहोतेर्होतेत्यौर्णवाभः। (७.१५; ४.२६)
२७. **रत्नधातमम्** रत्नधातमं रमणीयानां धनानां दातृतमम्। (७.१५)

[ खण्डम् — ४ ]



२८. **समना, समनम्*** समनं समननाद्वा, सम्माननाद्वा। (७.१७)
२९. **नसन्त*** नसन्त नसतिराप्नोतिकर्मा वा नमतिकर्मा वा। (७.१७)

[ खण्डम् — ५ ]

३०. **दिव्यः** दिव्यो दिविजः। (७.१८; ४.१३)
३१. **गरुत्मान्** गरुत्मान् गरणवान्, गुर्वात्मा महात्मेति वा। (७.१८)

## पञ्चमः पादः [ खण्डम् — १ ]

३२. **जातवेदाः*** जातवेदाः कस्मात्? जातानि वेद, जातानि वैनं विदुः, जाते-जाते विद्यत इति वा, जातवित्तो वा जातधनः, जातविद्यो वा जातप्रज्ञानः ''यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वम्''[1] इति ब्राह्मणम्। (७.१९)

## षष्ठः पादः [ खण्डम् — १ ]

३३,३४. **वैश्वानरः*, विश्वानरः*** वैश्वानरः कस्मात्? विश्वान् नरान् नयति, विश्व एनं नरा नयन्तीति वा। अपि वा विश्वानर एव स्यात्, प्रत्यृतः सर्वाणि भूतानि। तस्य वैश्वानरः (७.२१)। [ खण्डम् — २ ] तत् को वैश्वानरः? मध्यम इत्याचार्याः— वर्षकर्मणा ह्येनं स्तौति। (७.२२)

[ खण्डम् — ३ ]

३५. **पूरवः*** पूरवः पूरयितव्या मनुष्याः। (७.२३)
३६. **दस्युः** दस्युर्दस्यतेः क्षयार्थात् — उपदस्यन्त्यस्मिन् रसाः, उपदासयति कर्माणि। (७.२३)

## सप्तमः पादः [ खण्डम् — १ ]

३७. **घृतम्*** घृतमिति उदकनाम[2] — जिघर्तेः सिञ्चतिकर्मणः। (७.२४)

[ खण्डम् — २ ]

१. मै०सं० १.८.२ । २. निघं०१.१२.१०।

३८. **जमदग्नयः** जमदग्नयः प्रजमिताग्नयो वा, प्रज्वलिताग्नयो वा। तैरभिहुतो भवति। (७.२४)

[ खण्डम् — ४ ]

३९. **महिषाः*** (महिषा) महत्यन्तरिक्षलोक आसीनाः, महान्त इति वा। (७.२६; १४.१३)

४०. **ऋग्मियम्** ऋग्मियम् ऋग्मन्तमिति वा, अर्चनीयम् इति वा, पूजनीयम् इति वा। (७.२६)

४१. **विवस्वान्** विवस्वान् विवासनवान्। (७.२६)

४२. **परावतः*** (परावतः) प्रेरितवतः परागताद् वा। (७.२६; ११.४८)

४३. **मातरिश्वा** मातरिश्वा वायुः, मातरि अन्तरिक्षे श्वसिति — मातरि आशु अनितीति वा। (७.२६)

[ खण्डम् — ५ ]

४४. **मूर्धा** मूर्धा मूर्त्तमस्मिन् धीयते। (७.२७)

[ खण्डम् — ७ ]

४५. **आदितेयम्** आदितेयम् अदितेः पुत्रम्। (७.२९)

४६. **मिथुनौ** मिथुनौ कस्मात्? मिनोतिः श्रयतिकर्मा,'थु' इति नामकरणः, थकारो वा, नयतिः परः, वनिर्वा। समाश्रितौ अन्योऽन्यं नयतो वनुतो वा। मनुष्यमिथुनावपि एतस्मादेव। मेथन्तौ अन्योऽन्यं वनुत इति वा। (७.२९)

[ खण्डम् — ८ ]

४७. **सखायः** (सखायः) समानख्याना ऋत्विजः। (७.३०; १३.१३; १४.१०)

[ खण्डम् — ९ ]

४८. **प्रतीकम्** (प्रतीकं) प्रत्यक्तं भवति, प्रतिदर्शनमिति वा। (७.३१)

४९. **सुपर्ण्यः** सुपर्ण्यः सुपतना — एता रात्रयः। (७.३१, द्र० ३.१२)

## इति सप्तमोऽध्यायः





# अथ अष्टमोऽध्यायः

## प्रथमः पादः [ खण्डम् – १ ]

१. **द्रविणम्*** धनं द्रविणमुच्यते[1] — यदेनदभिद्रवन्ति। बलं वा द्रविणं[2] — यदेनेनाभिद्रवन्ति। (८.१)

२. **द्रविणोदाः*** द्रविणोदाः कस्माद्? धनं द्रविणमुच्यते[1] — यदेनदभिद्रवन्ति। बलं वा द्रविणं[2] — यदेनेनाभिद्रवन्ति। तस्य दाता द्रविणोदाः। (८.१)

[खण्डम् — २] तत्को द्रविणोदाः? इन्द्र इति क्रौष्टुकिः—स बलधनयोर्दातृतमः। तस्य च सर्वा बलकृतिः। ...अयमेवाग्निर्द्रविणोदा इति शाकपूणिः। आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति। ...ऋत्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते। (८.२)

३. **द्रविणसः** द्रविणस इति द्रविणसादिन इति वा, द्रविणसानिन इति वा, द्रविणसस्तस्मात् पिबतु इति वा। (८.२)

[ खण्डम् — ४ ]

४. **धिष्ण्यः** धिष्ण्यो धिषण्यो धिषणाभवः। (८.३)

५. **धिषणा*** धिषणा वाक्[3] — धिषेर्दधात्यर्थे, धीसादिनीति वा, धीसानिनीति वा। (८.३)

६. **वनस्पतिः*** 'वनस्पते' इत्येनम् (अग्निम्) आह। एष हि वनानां पाता वा, पालयिता वा। (८.३, द्र० ८.१७)

७. **वनम्*** वनं वनोतेः। (८.३; ५.१६)

## द्वितीयः पादः [ खण्डम् – १ ]

८. **आप्रियः** आप्रियः कस्माद्? आप्नोतेः, प्रीणातेर्वा। ''आप्रीभिराप्रीणाति'' इति च ब्राह्मणम्। (८.४)

९. **इध्मः*** इध्मः समिन्धनात् (८.४)। [ खण्डम् — २ ] यज्ञेध्म इति कात्थक्यः। अग्निरिति शाकपूणिः (८.५)

१०. **तनूनपात्*** तनूनपादाज्यं भवति। 'नपाद्' इत्यनन्तरायाः प्रजाया

१. निघं० २.१०.२५। २. निघं० २.९.२६। ३. निघं० १.११.४४।

नामधेयम् — निर्णततमा भवति। गौरत्र तनूरुच्यते— तता अस्यां भोगाः। तस्याः पयो जायते। पयस आज्यं जायते। अग्निरिति शाकपूणिः। आपोऽत्र तन्व उच्यन्ते— तता अन्तरिक्षे। ताभ्य ओषधि-वनस्पतयो जायन्ते। ओषधिवनस्पतिभ्य एष (अग्निः) जायते। (८.५)

११. **नपात्*** 'नपाद्' इत्यननन्तरायाः प्रजाया नामधेयम्— निर्णततमा भवति। (८.५)

१२. **तनूः** गौरत्र तनूरुच्यते— तता अस्यां भोगाः। आपोऽत्र तन्व उच्यन्ते— तता अन्तरिक्षे। (८.५)

**[ खण्डम् — ३ ]**

१३. **नराशंसः*** नराशंसो यज्ञ इति कात्थक्यः— नरा अस्मिन् आसीनाः शंसन्ति। अग्निरिति शाकपूणिः— नरैः प्रशस्यो भवति।[१] (८.६)

**[ खण्डम् — ४ ]**

१४. **ईळः (ईडः)** ईळ ईट्टेः स्तुतिकर्मणः, इन्धतेर्वा। (८.७)

**[ खण्डम् — ५ ]**

१५. **यह्वः*** यह्व इति महतो नामधेयम्[२] — यातश्च हूतश्च भवति। (८.८)

१६. **इषितः** इषितः प्रेषित इति वा, अधीष्ट इति वा। (८.८)

१७. **बर्हिः*** बर्हिः परिबर्हणात्। (८.८)

**[ खण्डम् — ६ ]**

१८. **वितरम्** वितरं विकीर्णतरमिति वा, विस्तीर्णतरमिति वा। (८.९)

१९. **वरीयः** वरीयो वरतरम्, उरुतरं वा। (८.९)

२०. **स्योनम्*** स्योनमिति सुखनाम[३] — स्यतेरवस्यन्त्येतत्, सेवितव्यं भवतीति वा। (८.९)

२१. **द्वारः*** द्वारो जवतेर्वा, द्रवतेर्वा, वारयतेर्वा। (८.९) **[खण्डम् — ७]** गृहद्वार इति कात्थक्यः। अग्निरिति शाकपूणिः। (८.१०)

२२. **व्यचस्वतीः** (व्यचस्वतीः) व्यञ्चनवत्यः। (८.१०)

२३. **ऊरु** वरतममङ्गम् ऊरू। (८.१०)

२४. **विश्वमिन्वा** विश्वमिन्वा विश्वम् आभिरेति यज्ञे। (८.१०)

२५. **उषासानक्ता** उषासानक्ता उषाश्च नक्ता च। (८.१०)

---

१. द्र० नाराशंसः (निरु०९.९)। २. निघं०३.३.१३। ३.निघं०३.६.१५।



२६. **नक्ता*** नक्तेति रात्रिनाम[१] — अनक्ति भूतान्यवश्यायेन, अपि वा नक्ता अव्यक्तवर्णा। (८.१०)

**[ खण्डम् — ८ ]**

२७. **सुष्वयन्ती** (सुष्वयन्ती) सेष्मीयमाणे इति वा, सुष्वापयन्त्याविति वा। (८.११)

२८. **शुक्रम्*** शुक्रं शोचतेर्ज्वलतिकर्मणः। (८.११)

२९. **पेशस्*** पेश इति रूपनाम[२]— पिंशतेर्विपिशितं भवति। (८.११)

**[ खण्डम् — १० ]**

३०,३१ **भरतः*, भारती*** भरत आदित्यः, तस्य भाः (भारती)।(८.१३)

३२. **त्वष्टा*** त्वष्टा तूर्णमश्नुत इति नैरुक्ताः। त्विषेर्वा स्याद् दीप्तिकर्मणः, त्वक्षतेर्वा स्यात् करोतिकर्मणः (८.१३)। **[खण्डम् — ११]** माध्यमिक-स्त्वष्टेत्याहुर्मध्यमे च स्थाने समाम्नातः। अग्निरिति शाकपूणिः। (८.१४)

**[ खण्डम् — १२ ]**

३३. **आविः** आविरावेदनात्। (८.१५)

३४. **आविष्ट्यः** आविरावेदनात्, तत्यः (आविष्ट्यः)। (८.१५)

३५. **चारु** चारु चरतेः। (८.१५; ११.५)

३६. **जिह्मम्** जिह्मं जिहीतेः। (८.१५)

३७. **ऊर्ध्वः** ऊर्ध्व उच्छ्रितो भवति। (८.१५)

३८. **प्रतीची** (प्रतीची) प्रत्यक्ते। (८.१५)

३९. **सिंहम्** सिंहं सहनम्। (८.१५; ३.१८)

## तृतीयः पादः [ खण्डम् – ४ ]

४०. **रजिष्ठैः** रजिष्ठैर्ऋजुतमैः, रजस्वलतमैः, प्रपिष्टतमैरिति वा। (८.१९)

**[ खण्डम् — ५ ]**

४१. **स्वाहा*** स्वाहेत्येतत् (कस्मात्)? सु आहेति वा, स्वा वागाहेति वा, स्वं प्राहेति वा, स्वाहुतं हविर्जुहोतीति वा। (८.२०)

## इति अष्टमोऽध्यायः

---

१. निघं०१.७.१०। २. निघं०३.७.१०।

# अथ नवमोऽध्यायः

## प्रथमः पादः [ खण्डम् – २ ]

१. **सुखम्*** सुखमिति कल्याणनाम। कल्याणं पुण्यं, सुहितं भवति, सुहितं गमयतीति वा। (९.२; ३.१३)
२. **हसना** (हसना) हसिता वा [पाता वा पालयिता वा]। (९.२)
३. **वाः*** वा वारयति। (९.२)

[ खण्डम् – ३ ]

४. **सप्तिः*** सप्तेः सरणस्यः। (९.३)
५. **आयुः*** आयुश्च वायुः – अयनः। (९.३)
६. **ऋभुक्षा*** (ऋभुक्षा) उरुक्षयणः, ऋभूणां राजेति वा। (९.३)
७. **शकुनिः*** शकुनिः शक्नोत्युन्नेतुमात्मानम्, शक्नोति नदितुमिति वा, शक्नोति तकितुमिति वा, सर्वतः शंकरोऽस्त्विति वा, शक्नोतेर्वा। (९.३)

[ खण्डम् – ४ ]

८. **मङ्गलम्** मङ्गलं गिरतेर्गृणात्यर्थे, गिरत्यनर्थानिति वा, अङ्गलम् अङ्गवत्, मज्जयति पापकमिति नैरुक्ताः, मां गच्छत्विति वा। (९.४)
९. **अङ्गलम्** अङ्गलम् अङ्गवत्। (९.४)

[ खण्डम् – ५ ]

१०. **गृत्समदः** गृत्समदो गृत्समदनः। (९.५)
११. **गृत्सः*** गृत्स इति मेधाविनाम[1] – गृणातेः स्तुतिकर्मणः। (९.५)
१२. **मण्डूकाः*** मण्डूका मज्जूका मज्जनात्, मदतेर्वा मोदतिकर्मणः, मन्दतेर्वा तृप्तिकर्मणः, मण्डयतेरिति वैयाकरणाः, मण्ड एषामोक इति वा। (९.५)
१३. **मज्जूकाः** मज्जूका मज्जनात्। (९.५)
१४. **मण्डः** मण्डो मदेर्वा, मुदेर्वा। (९.५)

[ खण्डम् – ७ ]

१५. **अक्षाः*** अक्षा अश्नुवत एनान् इति वा, अभ्यश्नुवत एभिरिति वा। (९.७; ५.३; १३.१२)

१. निघं०३.१५.३।



[ खण्डम् – ८ ]

१६. **प्रवातेजाः** प्रवातेजाः प्रवणेजाः। (९.८)
१७. **इरिणम्** इरिणं निर्ऋणम्, ऋणातेः – अपार्णं भवति, अपरता अस्माद् ओषधय इति वा। (९.८)
१८. **मौजवतः** मौजवतो मूजवति जातः। (९.८)
१९. **मूजवान्** मूजवान् पर्वतः – मुञ्जवान्। (९.८)
२०. **मुञ्जः** मुञ्जो विमुच्यत इषीकया। (९.८)
२१. **इषीका** इषीका इषतेर्गतिकर्मणः, इयमपीतरा[1] इषीका एतस्मादेव। (९.८)
२२. **विभीदकः** विभीदको विभेदनात्। (९.८)
२३. **जागृविः** जागृविर्जागरणात्। (९.८)
२४. **ग्रावाणः*** ग्रावाणो हन्तेर्वा, गृणातेर्वा, गृह्णातेर्वा। (९.८)

[ खण्डम् – ९ ]

२५. **अद्रिः*** अद्रयः पर्वता – अदरणीयाः [आदरणीयाः]। (९.९; ४.४)
२६. **श्लोकः*** श्लोकः शृणोतेः।(९.९)
२७. **घोषः*** घोषो घुष्यतेः। (९.९)
२८. **नाराशंसः*** येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः।[2] (९.९)

[ खण्डम् – १० ]

२९. **बालः** बालो बलवर्ती, भर्तव्यो भवति, अम्बास्मा अलं भवतीति वा, अम्बास्मै बलं भवतीति वा, बलो वा प्रतिषेधव्यवहितः। (९.१०)
३०. **मनीषा** मनीषया मनस ईषया=स्तुत्या=प्रज्ञया वा। (९.१०;२.२५)
३१. **अतूर्तः** अतूर्तः अतूर्ण इति वा, अत्वरमाण इति वा। (९.१०; १०.३२)

## द्वितीयः पादः [ खण्डम् – १ ]

३२. **रथः*** रथो रंहतेर्गतिकर्मणः, स्थिरतेर्वा स्याद् विपरीतस्य, रममाणोऽस्मिंस्तिष्ठतीति वा, रपतेर्वा, रसतेर्वा। (९.११)

१. बाणो हलेषिका वेत्यर्थः २. द्र० नराशंसः (निरु०८.६)।

[ खण्डम् — २ ]

३३. **दुन्दुभिः*** दुन्दुभिरिति शब्दानुकरणम्, द्रुमो भिन्न इति वा, दुन्दुभ्यतेर्वा स्याच्छब्दकर्मणः। (९.१२)

[ खण्डम् — ३ ]

३४. **इषुधिः*** इषुधिः इषूणां निधानम्। (९.१३)

[ खण्डम् — ४ ]

३५. **चिश्चा** (चिश्चा) प्रस्मयत इवापाव्रियमाणः, शब्दानुकरणं वा।(९.१४)

३६. **सङ्काः*** सङ्काः सचतेः, सम्पूर्वाद्वा किरतेः। (९.१४)

३७. **हस्तघ्नः*** हस्तघ्नो हस्ते हन्यते। (९.१४)

[ खण्डम् — ५ ]

३८. **पुमान्** पुमान् पुरुमना भवति, पुंसतेर्वा। (९.१५)

[ खण्डम् — ६ ]

३९. **धनुः*** धनुर्धन्वतेर्गतिकर्मणो वधकर्मणो वा, धन्वन्त्यस्माद् इषवः। (९.१६)

[ खण्डम् — ७ ]

४०. **समदः*** समदः सम्-अदो वाऽत्तेः, सम्-मदो वा मदतेः। (९.१७)

४१. **ज्या*** ज्या जयतेर्वा, जिनातेर्वा, प्रजावयतीषूनिति वा। (९.१७)

[ खण्डम् — ८ ]

४२. **इषुः*** इषुरीषतेर्गतिकर्मणः, वधकर्मणो वा (९.१८)

[ खण्डम् — ९ ]

४३. **मृगः** (मृगः) मृगमयः, मृगयतेर्वा।(९.१९;१.२०; १३.३)

४४. **कशा*** कशा प्रकाशयति भयमश्वाय, कृष्यतेर्वाऽणूभावात्। वाक् पुनः प्रकाशयत्यर्थान्, खशया, क्रोशतेर्वा। (९.१९)

[ खण्डम् — १० ]

४५. **सक्थि** सक्थि सचतेः— आसक्तोऽस्मिन् कायः। (९.२०)

४६. **जघनम्** जघनं जङ्घन्यतेः। (९.२०)

४७. **उलूखलम्*** उलूखलम् उरुकरं वा, ऊर्ध्वखं वा, ऊर्क्करं वा, ''उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत्।'' ''उरुकरं चैतत्तदुलूखलमित्याचक्षते परोक्षेण'' इति च ब्राह्मणम्। (९.२०)



## तृतीयः पादः [ खण्डम् — १ ]

४८. **वृषभः*** वृषभः प्रजां वर्षतीति वा, अति बृहति रेत इति वा। तद् वृषकर्मा, वर्षणाद् वृषभः। (९.२२; ४.८)

[ खण्डम् — २ ]

४९. **आजिः*** आजेराजयनस्य, आजवनस्येति वा। (९.२३)

५०. **सूभर्वम्** सूभर्वं भर्वतिरत्तिकर्मा। (९.२३)

५१. **प्रधनः** प्रधन इति संग्रामनाम — प्रकीर्णान्यस्मिन् धनानि भवन्ति। (९.२३)

५२. **द्रुघणः*** द्रुघणो द्रुममयो घनः। (९.२३)

[ खण्डम् — ३ ]

५३. **पृतनाज्यम्*** पृतनाज्यमिति संग्रामनाम[1] —पृतनानाम् अजनाद्वा, जयनाद् वा। (९.२४)

५४. **मुद्गलः** मुद्गलो मुद्गवान्, मुद्गगिलो वा, मदनं गिलतीति वा, मदंगिलो वा, मुदंगिलो वा। (९.२४)

५५. **भार्म्यश्वः** भार्म्यश्वो भृम्यश्वस्य पुत्रः। (९.२४)

५६. **भृम्यश्वः** भृम्यश्वो भृमयोऽस्याश्वाः, अश्वभरणाद्वा। (९.२४)

५७. **पितुः*** पितुरित्यन्ननाम[2] — पातेर्वा, पिबतेर्वा, प्यायतेर्वा। (९.२४)

[ खण्डम् — ४ ]

५८. **तविषी*** तविषीति बलनाम[3] — तवतेर्वा वृद्धिकर्मणः। (९.२५)

५९. **त्रितः** त्रितस्त्रिस्थान (इन्द्रः)। (९.२५; ४.६; ७.१२)

[ खण्डम् — ५ ]

६०. **गंगा** गंगा गमनात्। (९.२६)

६१. **यमुना** यमुना प्रयुवती गच्छतीति वा, प्रवियुतं गच्छतीति वा। (९.२६)

६२. **सरस्*** सर इत्युदकनाम[4] — सर्तेः। (९.२६)

६३. **सरस्वती*** सरस्वती सर इत्युदकनाम[4] — सर्तेः, तद्वती। (९.२६)

६४. **शुतुद्री** शुतुद्री शुद्राविणी = क्षिप्रद्राविणी, आशु तुन्नेव द्रवतीति वा। (९.२६)

६५. **परुष्णी** इरावतीं परुष्णीत्याहुः, पर्ववती भास्वती कुटिलगामिनी।

---

१. निघं०२.१७.९। २. निघं०२.७.६। ३. निघं०२.९.१०। ४. निघं०१.१२.३८।

(९.२६)

६६. **असिक्नी*** असिक्न्यशुक्लाऽसिता, सितमिति वर्णनाम, तत्प्रतिषेधोऽसितम्। (९.२६)

६७. **असितम्** सितमिति वर्णनाम, तत्प्रतिषेधोऽसितम्। (९.२६)

६८. **मरुद्वृधाः** मरुद्वृधाः सर्वा नद्यः, मरुत एना वर्धयन्ति।(९.२६)

६९. **वितस्ता** वितस्ताऽविदग्धा, विवृद्धा महाकूला। (९.२६)

७०. **आर्जीकीया** आर्जीकीयां विपाडित्याहुः - ऋजीकप्रभवा वा, ऋजुगामिनी वा। (९.२६)

७१. **विपाट्*** विपाड् विपाटनाद्वा, विपाशनाद्वा, विप्रापणाद्वा। पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः, तस्माद् विपाडुच्यते, पूर्वमासीद् उरुञ्जिरा। (९.२६)

७२. **सुषोमा** सुषोमा सिन्धुः— यदेनामभिप्रसुवन्ति नद्यः। (९.२६)

७३. **सिन्धुः*** सिन्धुः स्यन्दनात्। (९.२६; ५.२७)

७४. **आपः*** आपः आप्नोतेः। (९.२६; १४.३४)

**[ खण्डम् — ६ ]**

७५. **ओषधयः*** ओषधय ओषद् धयन्तीति वा,ओषत्येना धयन्तीति वा, दोषं धयन्तीति वा। (९.२७)

**[ खण्डम् — ७ ]**

७६. **बभ्रूणाम्** (बभ्रूणाम्) बभ्रुवर्णानां हरणानां भरणानामिति वा। (९.२८)

७७. **धामानि** धामानि त्रयाणि भवन्ति—स्थानानि, नामानि, जन्मानीति। जन्मान्यत्र[1] अभिप्रेतानि। सप्त शतं पुरुषस्य मर्मणाम्, तेष्वेना दधतीति वा। (९.२८)

**[ खण्डम् — ८ ]**

७८. **अरण्यानी*** अरण्यान्यरण्यस्य पत्नी। (९.२९)

७९. **अरण्यम्** अरण्यम् अपार्णं ग्रामात्, अरमणं भवतीति वा। (९.२९)

**[ खण्डम् — ९ ]**

८०. **श्रद्धा*** श्रद्धा श्रद् - धानात्। (९.३०)

**[ खण्डम् — ११ ]**

८१. **ऋक्षरः** ऋक्षरः कण्टकः — ऋच्छतेः। (९.३२)

१. ऋ०१०.९७.१, यजु०१२.७५।



८२. **कण्टकः** कण्टकः कन्तपो वा, कृन्ततेर्वा, कण्टतेर्वा स्याद् गतिकर्मणः— उद्गततमो भवति। (९.३२)

८३. **सप्रथाः*** (सप्रथाः) सर्वतः पृथुः। (९.३२; ६.७)

**[ खण्डम् — १२ ]**

८४. **अग्नायी** अग्नायी अग्नेः पत्नी। (९.३३; १२.४६)

## चतुर्थः पादः [ खण्डम् — १ ]

८५. **मुसलम्** मुसलं मुहुः सरम्। (९.३५)

**[ खण्डम् — २ ]**

८६. **हविर्धानम्** हविर्धाने हविषां निधाने। (९.३६)

**[ खण्डम् — ५ ]**

८७. **विषिता** (विषिते) विमुक्ते इति वा, विषण्णे इति वा। (९.३९)

८८. **हासमाना*** हासमाने हासतिः स्पर्धायाम्, हर्षमाणे वा। (९.३९)

८९. **आर्त्नी *** आर्त्नी अर्तन्यौ वा, अरण्यौ वा, आरिषण्यौ वा। (९.३९)

**[ खण्डम् — ६ ]**

९०. **शुनः** शुनो वायुः— शु एत्यन्तरिक्षे। (९.४०)

९१. **सीरः** सीर आदित्यः— सरणात्। (९.४०)

**[ खण्डम् — ७ ]**

९२. **देवी जोष्ट्री*** देवी जोष्ट्री = देव्यौ जोषयित्र्यौ। द्यावापृथिव्याविति वा, अहोरात्रे इति वा। सस्यं च समा चेति कात्थक्यः। (९.४१; ४२)

**[ खण्डम् — ८ ]**

९३. **देवी ऊर्जाहुती*** देवी ऊर्जाहुती = देव्यौ ऊर्जाह्वान्यौ। द्यावापृथिव्याविति वा, अहोरात्रे इति वा। सस्यं च समा चेति कात्थक्यः। (९.४२)

## इति नवमोऽध्यायः



# अथ दशमोऽध्यायः

## प्रथमः पादः [ खण्डम् – १ ]

१. **वायुः*** वायुः वातेर्वेतेर्वा स्याद् गतिकर्मणः। एतेरिति स्थौलाष्ठीविरनर्थको वकारः। (१०.१)

[ खण्डम् – ३ ]

२. **श्रवस्*** श्रव इत्यन्ननाम[1] — श्रूयत इति सतः। (१०.३)

३. **वरुणः*** वरुणो वृणोतीति सतः। (१०.३)

[ खण्डम् – ४ ]

४. **कवन्धम्*** कवन्धं मेघम् — कवनम् उदकं भवति, तदस्मिन् धीयते। उदकमपि कवन्धमुच्यते[2] — बन्धिरनिभृतत्वे, कम् अनिभृतं च।(१०.४)

[ खण्डम् – ५ ]

५. **रुद्रः*** रुद्रो रौतीति सतः, रोरूयमाणो द्रवतीति वा, रोदयतेर्वा। ''यदरुदत्तद् रुद्रस्य रुद्रत्वम्''इति काठकम्। ''यदरोदीत् तद् रुद्रस्य रुद्रत्वम्'' इति हारिद्रविकम् (१०.५)। अग्निरपि रुद्र उच्यते।(१०.७)

[ खण्डम् – ६ ]

६. **तिग्मम्*** तिग्मं तेजतेरुत्साहकर्मणः। (१०.६)

७. **आयुधम्*** आयुधम् आयोधनात्। (१०.६)

[ खण्डम् – ७ ]

८. **दिद्युद्*** दिद्युद् द्यतेर्वा, द्युतेर्वा, द्योततेर्वा। (१०.७)

९. **तोकम्*** तोकं तुद्यतेः। (१०.७)

१०. **तनयम्*** तनयं तनोतेः। (१०.७)

[ खण्डम् – ८ ]

११. **जरा** जरा स्तुतिः — जरतेः स्तुतिकर्मणः। (१०.८)

१२. **जराबोध** जरा स्तुतिः — जरतेः स्तुतिकर्मणः। तां बोध, तया बोधयितरिति वा। (१०.८)

१३. **इन्द्रः*** इन्द्र (१) इरां दृणातीति वा, (२) इरां ददातीति वा, (३) इरां दधातीति वा, (४) इरां दारयत इति वा, (५) इरां धारयत इति वा, (६) इन्दवे द्रवतीति वा, (७) इन्दौ रमते इति वा, (८) इन्धे भूतानीति वा। ''तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वम्'' इति विज्ञायते। (९) इदं करणाद् इत्याग्रायणः। (१०) इदं दर्शनाद् इत्यौपमन्यवः। (११) इन्दतेर्वा ऐश्वर्यकर्मणः, (१२) इन्दन् शत्रूणां दारयिता वा, (१३) द्रावयिता वा, (१४) आदरयिता च यज्वनाम्। (१०.८)

[ खण्डम् – ९ ]

१४. **उत्सः*** उत्स उत्सरणाद्वा, उत्सदनाद्वा, उत्स्यन्दनाद्वा, उनत्तेर्वा। (१०.९)

१५. **अरम्णाः** अरम्णाः — रम्णातिः संयमनकर्मा विसर्जनकर्मा वा। (१०.९)

[ खण्डम् – १० ]

१६. **पर्जन्यः*** पर्जन्यस्तृपेराद्यन्तविपरीतस्य — तर्पयिता जन्यः, परो जेता वा, (परो) जनयिता वा, प्रार्जयिता वा रसानाम्। (१०.१०)

[ खण्डम् – ११ ]

१७. **बृहस्पतिः*** बृहस्पतिर्बृहतः पाता वा, (बृहतः) पालयिता वा। (१०.११)

[ खण्डम् – १२ ]

१८. **चमसः*** चमसः कस्मात्? चमन्त्यस्मिन्निति। (१०.१२)

१९. **ब्रह्मणस्पतिः*** ब्रह्मणस्पतिर्ब्रह्मणः पाता वा, (ब्रह्मणः) पालयिता वा। (१०.१२)

## द्वितीयः पादः [ खण्डम् – १ ]

२०. **क्षेत्रम्** क्षेत्रं क्षियतेर्निवासकर्मणः। (१०.१४)

२१. **क्षेत्रस्य पतिः** क्षेत्रस्य पतिः, क्षेत्रं क्षियतेर्निवासकर्मणः। तस्य पाता वा, पालयिता वा। (१०.१४)

[ खण्डम् – ३ ]

२२. **पतयः** (पतयः) पातारो वा पालयितारो वा। (१०.१६)

२३. **वास्तुः** वास्तुर्वसतेर्निवासकर्मणः। (१०.१६)

२४. **वास्तोष्पतिः*** वास्तोष्पतिः, वास्तुर्वसतेर्निवासकर्मणः। तस्य पाता वा पालयिता वा। (१०.१६)

१. निघं० २.७.४।

२. निघं० १.१२.६।

